॥ श्रीः ॥

# ॥ श्रीवैदर्भकन्याचरितम् ॥

श्री शैलकुलतिलकचतुर्वेदशतक्रतु श्रीकुमारताताचार्यसूनुना

पाटूरार्यापरनामधेयेन

श्रीवेङ्कटार्यसूरिणा

विरचितम्

तद्वंश्येन

श्रीताताचार्येण

अभिनवभट्टबाणेन

रा. ष. वि. कृष्णमाचार्येण च

परिशोधितम्.

कुम्भघोणस्थ

श्रीकोमलाम्बामुद्रालये

मुद्रितम् ॥

விலை] 1924. [2-அ ரூ.

॥ श्रीः ॥

# ॥ श्री वैदर्भकन्याचरितम् ॥

शतक्रतोस्तातगुरोस्तनूजः
श्रीवेङ्कटाचार्य इति प्रतीतः ।
रागैर्युतं षड्भिरुदारपद्यै-
र्वैदर्भकन्याचरितं तनोति ॥ १ ॥

अभ्यागतेषु शिशुपालमुखेषु तस्मिन्
संप्रेषिते द्विजवरे च चिरायमाणे ।
चिन्ताकुलां कृतगतागतिकामलिन्दे
भैमीं किरातवनितेव ससार गौरी ॥ २ ॥

ग्रैवेयमाहितमथोरुवराटिकाभि-
र्यष्टिं सुवर्णरचितामपि रत्नपेटीम् ।
चेलोपनद्धमपि चादधती कुमारं
भैमीमुवाच भवुकं ब्रुवती किराती ॥ ३ ॥

मा शोचीस्तव यद्वृत्तं वर्तते यच्च भावि यत् ।
वक्ष्ये तदखिलं देवि दर्शय स्वकराम्बुजम् ॥ ४ ॥

## ❁ नादनामक्रियारागेण गीयते— ❁

पल्लवि ।

वाचयति मूकमपि दर्शयति भाग्यं
सूचयति रमणमभिरूपमपि योग्यम् ।
नित्यशुभशंसि बहु लक्ष्म तव हस्ते
सत्यमिदमालपितमम्ब पुरतस्ते ॥

कमलमुखि पूर्वमसि कमलनिधिजाता
कृतवसतिरुरसि निजकामितुरभिजाता ।
समधिगतधरणिवपुरादिमथ कोलं
संश्रितवती सकलजगदवनलोलम् ॥

रमणि भवदवनितलजनिरसि च सीता
रचितजगदवनमथ रघुवरमुपेता ।
विमलयसि संप्रति तु भीमनृपवंशं
व्यपगतशुगेष्यसि च कैटभजिदंशम् ॥ वाचयति ।

कृपणजनकदनहरविमलगुणपूरं
कृतनिखिलजगदवनसृजिलयविहारम् ।
चिन्तयसि कमपि हृदि पूरुषमुदारं
चिरविरहखेदकरमवितसुखारम् ॥

कृन्तति च यावदयमयि तव विषादं
कलयति च तव झटिति विपुलतरमोदम् ।
हन्त तव भाग्यतरुरङ्कुरमुपेता
हृदयगतशोकमयशङ्कुरपयाता ॥ वाचयति ।

भावि तव भद्रमहमालपितुमीहे
भाग्यनिधिरसि युवतिजनमणिसमूहे ।
श्रावितसुशीलगुणगणभवदुदन्तं
श्रोष्यसि च नगरमुपयान्तमिह कान्तम् ॥

भावितमनोजशरकृतकदनगरिमा
प्राप्स्यति च सन्निधिं भवतीममितमहिमा ।
देवि परिणेष्यति च हरिरमलसत्त्वां
दाशरथिरवनिभुवमधिगुण इव त्वाम् ॥ वाचयति।

अम्ब शृणु यास्यसि तदग्रमहिषीत्वं
हृद्यसवततिभिरपि यक्ष्यसि सदा त्वम् ।
शम्बरजिदुदरमुपगच्छति पुरा ते
स तु पितृवदधिकतरकीर्तिमपि सूते ॥

बिम्बमिव पूर्वगिरिरारुणमुदारे
बालमभिजनयति च पटुमरिविदारे ।
कम्बुनिभकण्ठि बलिसूनुसुतयायं
कलितविहृतिरुदयमयति भुवि गेयम् ॥ वाचयति

इति वचनमतिरुचिरमचलतनयायाः
प्रतिविदितनिखिलजननिभृतहृदयायाः ।
वदनशशिगलदमृतमिव निशमयन्ती
वनजमधुतुलितमथ हृदि मुदमयन्ती ॥

कविविबुधविनुतनिजगुणनिकरधन्या
कनकनिभतनुरवनिरमणवरकन्या ।

तरलहृदमुदितभवपीडनमधीरं
तारयतु गुरुतिलकतातयकुमारम् ॥ वाचयति ।

लेखामिवामृतकरस्य भुजङ्गमुक्तां
भैमीं प्रसन्नवदनामथ तामवादीत् ।
मोचामरन्दरससारमुचा स्ववाचा
भूयो भवार्धतनुतां दधती किराती ॥ १ ॥

न वयं रासभक्रीता न कुटीरकृतालयाः ।
न जाता वालिसुग्रीवकुले सांकर्यकारिणि ॥ २ ॥

न वायसबिलाक्रुष्टपुलाककलिताशनाः ।
न संचरामः सर्वत्र क्षुद्रधान्यकृताशयाः ॥ ३ ॥

अप्रत्युपक्रियापेक्षं केवलोपक्रियाफलम् ।
दिव्यानामिव योषाणां वाचः सत्यमवेहि नः ॥४॥

❀ कुरञ्जिरागेण गीयते ❀

पल्लवि ।

मयि सुदतीमणि दधती मान्यमतिं वसु ददती ।
शृणु विदितं मम गदितं श्रुतियुगलामृतमुदितम् ॥

रजतगिरेरयि शिखरे रञ्जितदैवतनिकरे
महिततरे मणिरुचिरे मेरुविभाभिभवकरे ।

मधुलहरीलसदमरीमधुरवचोगीतचरी
कुशलकरी मम नगरी कनति यथा त्रिबुधपुरी ॥ मयि

मम शकुनै ऋतवचनैर्मैथिलजा मृदुरचनैः
पुरुषवरं रघुवीरं प्राप महागुणपूरम् ।
किं च नलं प्रथितकुलं कुवलयपालनकुशलं
तमयन्ती दमयन्ती तोषमगाद्रमयन्ती ॥ मयि

रमणि ममोदितमन्था रमणीया नृपकन्याः
श्रवणपथे निदधानाः शुभमगमन् कृतमानाः ।
तव च समेष्यति नेता त्रिदशपतेरपि जेता
प्रदिश बहूनुपहारान् पूजय भूसुरवारान् ॥ मयि

जगदधिकोदयशौर्यं जरितधराधरधैर्यं
सगरनृपान्वयचन्द्रं सरसगुणावलिसान्द्रम् ।
निगमशिरोमणिदीपं निकृतमनोभवरूपं
सरसतरं हृदि रामं स्मर जगतामभिरामम् ॥ मयि

देवि वधूमणि नव्या देहि मणीरिह भव्याः
भावि शुभं तव दयितं भावय मे वचनमृतम् ।
प्रणम समाश्रितभर्गां प्रणतसुरासुरवर्गां
कलितसमीहितसर्गां कलुषहरामिह दुर्गाम् ॥ मयि

इति गिरिजामुदितवतीमीप्सितदा मुदितवतीं
आदधती धननिकरैरभिलषितादधिकतरैः ।
भीमसुता गतपारे भीमभवाकूपारे
तरणिरुचेरवपतितं तातगुरोरवतु सुतम् ॥ मयि

तदनु शुभमुदन्तं तद्गिराऽऽकर्णयन्ती
रमणमचिरलभ्यं रुक्मिणी तर्कयन्ती ।
हसितविकसिताक्षी हर्षनिघ्ना बभासे
परिलसितपयोजा पद्मिनीव प्रभाते ॥ १ ॥

वसुचयपरितुष्टा वासुदेवस्य कांक्षा-
विषयगुणविभूषां विश्रुताश्चर्यवेषाम् ।
करतलमतिरागादात्मयष्ट्या स्पृशन्ती
रुचिरमिति किराती रुक्मिणीमाबभाषे ॥ २ ॥

॥ ॐकन्नडगौळरागेण गीयते—ॐ

पल्लवि ।

कामितादतिदानदोऽर्थिषु काम्यमादधदङ्गं
कामिनीमणि केशवस्तव सोऽपि कांक्षति सङ्गम् ।

लोकमण्डलपालनाध्वरशीलमम्बुदगात्रं
लीलया कृतवल्लवीरतिलोलमम्बुजनेत्रम् ।
शोकमोचनसादरं हृतसंपदामभिजातं
शोभनाकरमागमाञ्चलशीलयसद्गुणजातम् ॥

स्तोकसंनतिकारिणे निजसाम्यदं यमुशन्ति
साधवो हृदि नित्यसंभृतसंमदाय भजन्ति ।

तोककानिव तोयदो ननु तोयसंग्रहरागान्
तातवत्परिपाति यो निजपादसंनतपूगान् ॥ कामि-

पुञ्जितं सखि देवकीवसुदेवभाग्यकदम्बं
पूरिताखिलमेदिनीजनतार्थनानिकुरुम्बम् ।
रञ्जनादिगुणामृतोदधिराघवप्रतिबिम्बं
राकयेव कृताधिकद्युतिराजितं शशिबिम्बम् ॥

भञ्जिताहितमञ्चितोदयभासुरारुणभासं
भामिनीजनमोहनामितभव्यदिव्यविलासम् ।
यं जितेन्द्रियसंचया हृदयान्तराहितवासं
योगिनोऽपि विचिन्वते कृतयातुबृन्दनिरासम् ॥ कामि-

कारणं जगतामभीप्सितपूरणं गुणनन्द्यं
तारणं भवतोयधेरघदारणं भुवि वन्द्यम् ।
पोषणं यदुसंततेः श्रुतिभूषणं दुरितानां
मोषणं समुपेत्य यं परितोषणं प्रणतानाम् ॥

पूतनामसमञ्चितं चिरभावनावशगम्यं
वासनागतसाधनान्तरमोचनाशयनम्यम् ।
पूतना शिशुघातिनी रिपुसूदनादरवन्तं
मोहनाकृतिराप मानिनि वञ्चनापटुरन्तम् ॥ कामि-

तावकीमिव तत्तनूमपि तारकापतिरिन्दुः
तापयत्यनलोपमः सखि तस्य चन्दनबिन्दुः ।
भावजोऽपि शराग्निना परिबाधते निशि कृष्णं
भावयत्ययमम्ब कोकिलभाषणं भृशमुष्णम् ॥

शृण्वती मुदिता वधूरिति शोभनामपदोषां
शैलराजसुतागिरं मधुशालिनीं कृततोषाम् ।
तन्वती तदुरःस्थले निजतारमौक्तिकहारं
तारयेदिममानतं गुरुतातयार्यकुमारम् ॥ कामि-

भवुकमिति चरित्रं श्रीपतेराभिरूप्यं
स्वविषयमनुरागं प्रेम चाकर्णयन्ती ।
स्मरपरवशचेतास्तद्वियोगासहिष्णु-
र्न्यगददचलकन्यासंनिधौ रुक्मिणी सा ॥१॥

❁ सावेरिरागेण गीयते— ❁

पल्लवि ।

स कदा मामभियास्यति
सारसनयनः स कदा मामभिपास्यति ।

मलयादायाति मारुतो मञ्जुलमधुप-
निलयादम्बुजकोशतो निःसरत्यमृतम् ।
विलयायोदेति भूरिविरहाणां मादृशां
कलयामि किं कलितव्यसना मदनेन ॥ स कदा

अदया कोकिलसन्ततिरविरतराज-
दुदयामञ्जुजसंपदमुन्नम्य कठिन-
हृदया भावितविरहगदया संप्रति गत-
मदया किं सह्या विपुलवेदनया मया ॥ स कदा

सरता पङ्कजकाननसंनिधेरुपरि
किरता सौरभमेदुररेणुकदम्बमा-
हरता तन्मधु मारशरतापाय वलता
मरुताहं मनसि महति पीडिता जाता ॥ स कदा

अधुना नादधते मुदमतिशयशालि-
मधुना मानसहारिणा माद्यन्ति निशि च ।
विधुना कृतकामिमोदविधिनालोकय देवि
मिथुनानि मुदितानीह विहृतौ पतताम् ॥ स कदा

सनयालंकृतिसूक्तया शैलजया पर-
मनयाश्वासितामोदिता तातार्यदयित
तनयायापेतकुमतिकुहनायाधिकजात-
विनयायेन्दुवदना भवुकानि ददातु ॥ स कदा

तामम्बुजाक्षविरहेण तथा वितप्ता
मल्लीमिवातपभरेण वधूमतल्लीम् ।
उज्जीवनेन वचनेन पुनर्न्यगादी-
दागामिवस्तुपरिबोधवती किराती ॥ १ ॥

अद्यैव तव कल्याणं भविष्यति समीहितम् ।
समेष्यसि च कृष्णेन कमलेव मुरारिणा ॥ २ ॥

अनुरूपमिदं रूपं तस्यैव जगतीपतेः ।
स्पष्टं शंसति कल्याणि भाविनीं तव संपदम् ॥३॥

## ❀ मध्यमावति रागेण गीयते— ❀

पल्लवि ।

**मधुवाणि भाग्यवती महिलासु भवती**
**न करोतु मनसि खेदं नलिनाक्षि यातु मोदम् ॥**

जलधरा इव रुचिरा जितचमरास्तव चिकुराः
कलयन्ति शिखिकलापं कलकण्ठि विगतरूपम् ।
विनताङ्गि निटिलतलं विधुकलया विहिततुलं
भ्रूयुगलं जयहेतुर्भवति धनू रतिनेतुः ॥ मधुवाणि

सुन्दरि तावकनेत्रं स्फुरदिन्दीवरजैत्रं
मधुरविभा तव योषामणि नासामणिरेषा ।
सुन्दरि लावण्यझरीस्यन्दिप्रपन्मोहकरी
मृदुलतरा तव वाणी मुखचन्द्रामृतवेणी ॥ मधु-

रूषितभागमपाङ्गैः रचितोत्पलभङ्गैः
कलयामि च ताटङ्कं कृतशाणोपलशङ्कम् ।
परिपाकारुणबिम्बप्रतिबिम्बाधरमम्ब
परिभवितुं मुखकमलं परिपूर्णं शशिनमलम् ॥ मधु-

मुक्तालसदुपकण्ठं मन्ये दरमिव कण्ठं
नाभिबिलादुदितायाः नव्यौ गुच्छौ नु लतायाः ।
तन्वि विभाजितलकुचौ तव जयतः पृथुलकुचौ
श्रितहारौ रथपदयोः श्रियमयतो बिसमुखयोः ॥ मधु-

अधिकविभाभरलहरेरावालाङ्गदरुचिरे
कलिताभीष्टसमूहे कल्पलते तव बाहे ।

किसलानामावलयः कमनीया अंगुलयः
कुसुमानामिव निकराः कामिनि ते सितनखराः ॥  मधु-

---

तरुणारुणबिम्बभासुरं
वसनं सूक्ष्मतरं वसानया ।
समलासि ससांध्यरागया
दिनलक्ष्म्येव विलासिनि त्वया ॥ १ ॥
यद्येतदस्ति नयनेन्द्रियगोचरः स्या-
न्नो चेत्कुचाद्वितयभारधृतिः कुतः स्यात् ।
इत्थं समानबलकोटियुगावलम्बी
जागर्ति मध्यविषये विशयस्तवायम् ॥ २ ॥

❀ केदारबिन्दुरागेण गीयते— ❀

पल्लवि ।

परिसूचयति देवि वरमम्ब रूपं
तव
परिणेतृभावे परिबृढमनुरूपम् ।
स्तनयुगभूमिधरकान्तपूरपातैः
तन्वि
समुपेतनिम्नतेव सरयमुपजातैः
कनदभिरूप्यपरिवाहपरिशोभी
तव
कुसुमास्त्रकेलिह्रद इव भाति नाभिः ॥  परिसूचयति

तव रत्ननिर्मितेयमम्बुजाक्षि काञ्ची ।
निज-
कलनादपरिभूतशोभनविपञ्ची ।
जनने तुरङ्गजस्य मणितोरणाभाम्
एति
जघनैकवासमधिगन्तुरतिशोभाम् ॥ परिसूचयति

नतगात्रि रथचक्रमिव ते नितम्बं
निज-
नेत्रकरचारोचितसंपन्निकुरम्बम् ।
वीतशोभमतिशीतकदलीप्रकाण्डं
किल
विदधानमवधूतमदनागशुण्डम् ॥ परिसूचयति

सुतनूषु मदलोपकरमूरुयुग्मं
ननु
सुन्दरि ते नातिशीतमपि नातितिग्मम् ।
कातराक्षि कृतगर्भशालिशालिभङ्गं
तव
कलयामि जङ्घायुगमात्मभूनिषङ्गम् ॥ परिसूचयति

पादपङ्कजबिसवलयाकारकान्तौ
अयि
परिसृतकान्तिपूरहीरवारवन्तौ ।
नादजितकलहंसमिथुनौ हंसकौ ते
मम
नवनवमथ भूरिमोदमादधाते ॥ परिसूचयति

सुदर्शयितुमपटुर्हि मुखचन्द्रमास्ते
सरसिजमिह रेखामिषमम्ब जोषमास्ते ।
मधुवैरिहृद्यं रूपमिदमीदृशं ते
तेन
मधुराङ्गि मङ्गलानि भवतीमाभजन्ते ॥ परिसूचयति

तारमिति तद्वचनमेषाकर्णयन्ती
मणि-
हाराभिरदसीयं वर्ष्म भूषयन्ती ।
सारसाक्षमन्दिरैकदेवता भवित्री
भुवि
सारभूतचरिताथ भीमराजपुत्री ॥ परिसूचयति

पूरयतु सर्वमिष्टमातनोतु कोशं
धन-
परिपूर्णमादधातु कृत्तभवपाशम् ।
तारयतु निजसेवापरिपूतं
गुरु-
तातयार्यतनूभवमञ्जलिसमेतम् ॥ परिसूचयति

वासोविभूषणसुवर्णमणिप्रवेकै-
रामोदिनीमचलजामधितन्वतीं ताम् ।
आसाद्य स द्विजवरो हरिमाचचक्षे
प्राप्तं बलेन सह कुण्डनराजधानीम् ॥ १ ॥

अमृतमिव पिबन्ती तद्वचस्तस्य योग्यं
द्रविणमलभमाना दातुमालोकमाना ।
महति रहितपारे मज्जती मोदसिन्धौ
रचयतु मम नित्यं रुक्मिणी मङ्गलानि ॥२॥

इति

श्रीशैलकुलतिलकचतुर्वेदशतक्रतु श्रीकुमारतातयार्यसूनोः

पाट्टरार्यापरनामधेयस्य श्रीवेङ्कटार्यसूरेः कृतिषु

श्रीवैदर्भकन्याचरितं

समाप्तम् ॥